श्रीसुभगोदयस्तुती

॥ श्रीः॥

॥ श्रीसुभगोदयस्तुतिः॥

श्री गौडपादाचार्य विरचिता

भवानि त्वां वन्दे भवमहिषि सच्चित्सुखवपुः
पराकारां देवीममृतलहरीमैन्दवकलाम् ।
महाकालातीतां *कलितसरणीकल्पिततनुं var कलितसरणिं कल्पिततनुं
सुधासिन्धोरन्तर्वसतिमनिशं वासरमयीम् ॥ १॥

मनस्तत्त्वं जित्वा नयनमथ नासाग्रघटितं
*पुनर्व्यावृत्ताक्षः स्वयमपि यदा पश्यति पराम् ।
varपुनर्व्यावृत्ताक्षिद्वयमपि
तदानीमेवास्य स्फुरति बहिरन्तर्भगवती
परानन्दाकारा परशिवपरा काचिदपरा ॥ २॥

मनोमार्गं जित्वा मरुत इह नाडीगणजुषो
निरुध्यार्कं सेन्दुं दहनमपि सञ्ज्वाल्य शिखया ।
सुषुम्णां संयोज्य श्लथयति च षड्ग्रन्थि शशिनं
तवाज्ञाचक्रस्थं *विलयति महायोगिसमयी ॥ ३॥ varश्लथयति, विलसति

यदा तौ चन्द्रार्कौ निजसदनसंरोधनवशा-
*दशक्तौ पीयूषस्रवणहरणे सा च भुजगी । varदशक्ता
प्रबुद्धा क्षुत्क्रुद्धा दशति शशिनं बैन्दवगतं
सुधाधारासारैः स्नपयसि तनुं बैन्दवकले ॥ ४॥

पृथिव्यापस्तेजः पवनगगने तत्प्रकृतयः
*स्थितास्तन्मात्रास्ता विषयदशकं मानसमिति । varस्थितास्तन्मात्रासा
*ततो माया विद्या तदनु च महेशः शिव इतः varतथा
परं तत्त्वातीतं मिलितवपुरिन्दोः परकला ॥ ५॥

कुमारी यन्मन्द्रं ध्वनति च ततो योषिदपरा
कुलं त्यक्त्वा *रौति स्फुटति च *महाकालभुजगी ।
varकाचित्; महाकालपतगी, महानीलभुजगी
ततः पातिव्रत्यं भजति दहराकाशकमले
सुखासीना योषा भवसि भवसीत्काररसिका ॥ ६॥

त्रिकोणं ते कौलाः कुलगृहमिति प्राहुरपरे
चतुष्कोणं प्राहुः समयिन इमे बैन्दवमिति ।
*सुधासिन्धौ तस्मिन्सुरमणिगृहे सूर्यशशिनो- varसुधासिन्धोस्तस्मिन्
रगम्ये रश्मीनां समयसहिते त्वं *विहरसे ॥ ७॥ varविहरसि

त्रिखण्डं ते चक्रं शुचिरविशशाङ्कात्मकतया
मयूखैः *षट्त्रिंशद्दशयुततया खण्डकलितैः ।
varषट्त्रिंशत्त्रिशतयुतमाखण्ड,षट्त्रिंशच्छतयुततया
पृथिव्यादौ तत्त्वे पृथगुदितवद्भिः परिवृतं
*भवेन्मूलाधारात्प्रभृति तव षट्चक्रसदनम् ॥ ८॥
varभवेन्मूलाधारप्रभृति

शतं चाष्टौ वह्नेः शतमपि कलाः षोडश रवेः
शतं *षट् च त्रिंशत्सितमयमयूखाश्चरणजाः । varषट्त्रिंशद्द्वे, षट्त्रिंशद्द्वै सितमयि
य एते षष्टिश्च त्रिशतमभवंस्त्वच्चरणजा* varचरणगा
*महाकौलेस्तस्मान्न हि तव शिवे कालकलना ॥ ९॥ varमहाकालस्तस्मात्

त्रिकोणं चाधारं *त्रिपुरतनु तेऽष्टारमनघे varत्रिभुवननुते, त्रिभुवननुतेष्वार
*भवेत्स्वाधिष्ठानं पुनरपि दशारं मणिपुरम् । varतव स्वाधिष्ठानं भगवति
दशारं ते संवित्कमलमथ मन्वश्रकमुमे
विशुद्धं स्यादाज्ञा शिव इति ततो बैन्दवगृहम् ॥ १०॥

त्रिकोणे ते वृत्तत्रितयमिभकोणे वसुदलं
कलाश्रं मिश्ररि भवति भुवनाश्रे *च भुवनम् । varत्रिभुवनम्
चतुश्चक्रं शैवं निवसति *भगे शाक्तिकमुमे
varदशे शाक्तिकमुमे, भगे शाक्तकमुमे
प्रधानैक्यं षोढा भवति च तयोः शक्तिशिवयोः ॥ ११॥

कलायां बिन्द्वैक्यं तदनु च तयोर्नादविभवे
तयोर्नादेनैक्यं तदनु च कलायामपि तयोः ।
तयोर्बिन्दावैक्यं त्रितयविभवैक्यं परशिवे
*तदेवं षोढैक्यं भवति हि सपर्या समयिनाम् ॥ १२॥ varतथैवं

कला नादो बिन्दुः क्रमश इह व्रणाश्च चरणं
षडब्जं चाधारप्रभृतिकममीषां च मिलनम् ।
*तदेवं षोढैक्यं भवति खलु येषां समयिनां varतथैवं
चतुर्धैक्यं तेषां भवति हि सपर्या समयिनाम् ॥ १३॥

तडिल्लेखामध्ये स्फुरति मणिपूरे भगवती
चतुर्धैक्यं तेषां भवति च चतुर्बाहुरुदिता ।
धनुर्बाणानिक्षूद्भवकुसुमजानङ्कुशवरं
तथा पाशं बिभ्रत्युदितरविबिम्बाकृतिरुचिः ॥ १४॥ varकृतिरुचिम्

भवत्यैक्यं षोढा भवति भगवत्याः समयिनां
मरुत्वत्कोदण्डद्युतिनियुतभासा समरुचिः ।
भवत्पाणिव्रातो दशविध इतीदं मणिपुरे
भवानि प्रत्यक्षं तव वपुरुपास्ते न हि परम् ॥ १५॥

इत्यैक्यनिरूपणम्॥

भवानि श्रीहस्तैर्वहसि फणिपाशं सृणिमथो
धनुः पौण्ड्रँ पौष्पं शरमथ जपस्रक्षुकवरौ ।
अथ द्वाभ्यां मुद्रामभयवरदानैकरसिकां varरसिके
क्वणद्वीणां द्वाभ्यां *त्वमुरसि कराभ्यां च बिभृषे ॥ १६॥ varउरसि च

त्रिकोणैरष्टारं त्रिभिरपि दशारं समुदभू-
द्दशारं भूगेहादपि च भुवनाश्रं समभवत् ।
ततोऽभून्नागारं नृपतिदलमस्मात्त्रिवलयं
*चतुर्द्वाःप्राकारत्रितयमिदमेवाम्ब *शरणम् ॥ १७॥ varचतुर्धा; चरणम्

चतुःषष्टिस्तन्त्राण्यपि कुलमतं निन्दितमभू- varकुलनुतंनिन्दितमिदं तदेत
द्यदेतन्मिश्राख्यं मतमपि भवेन्निनिन्दितमिह ।
शुभाख्याः पञ्चैताः श्रुतिसरणिसिद्धाः प्रकृतयो
महाविद्यास्तासां भवति *परमार्थो भगवती ॥ १८॥ varपरमार्था, परमार्थो भगवति

स्मरो मारो मारः स्मर इति *परो मारमदन - varस्मरो
स्मरानङ्गाश्चेति* स्मरमदनमाराः स्मर इति । varश्चैते
त्रिखण्डः खण्डान्ते *कलितभुवनेश्यक्षरयुत- varकलितभुवने ते क इति यः
श्चतुःपञ्चार्णास्ते त्रय इति च पञ्चाक्षरमनुः* ॥ १९॥ varमनोः

त्रिखण्डे त्वन्मन्त्रे शशिसवितृवह्न्यात्मकतया
स्वराश्चन्द्रे लीनाः सवितरि कलाः कादय इह ।
यकाराद्या वह्नावथ कषयुगं बैन्दवगृहे
निलीनं सादाख्ये शिवयुवति नित्यैन्दवकले ॥ २०॥

ककाराकाराभ्यां स्वरगणमवष्टभ्य निखिलं
कलाप्रत्याहारात्सकलमभवद्व्यञ्जनगणः ।
त्रिखण्डे स्यात्प्रत्याहरणमिदमन्वक्कषयुगं* varमञ्चत्कषयुगं
क्षकारश्चाकारोऽक्षरतनुतया चाक्षरमिति ॥ २१॥

*विदेहेन्द्रापत्यं श्रुत इह ऋषिर्यस्य च मनो-
varविदेहो नैरृत्याः सुत इह ऋषिर्यः स च
रयं चार्थः सम्यक्श्रुतिशिरसि तैत्तिर्यकऋउचि ।
ऋषिं हित्वा चास्या हृदयकमले नैतमृषिमि-
त्यृचाभ्युक्तः पूजाविधिरिह भवत्याः समयिनाम् ॥ २२॥

त्रिखण्डस्त्वन्मन्त्रस्तव च सरघायां निविशते
श्रियो देव्याः शेषो यत इह समस्ताः शशिकलाः ।
त्रिखण्डे त्रैखण्ड्यं निवसति समन्त्रे च सुभगे
षडब्जारण्यानी त्रितययुतखण्डे निवसति ॥ २३॥

त्रयं चैतत्स्वान्ते परमशिवपर्यङ्कनिलये
परे *सादाख्येऽस्मिन्निवसति चतुर्धैक्यकलनात् । varसादाख्यास्मिन्
स्वरास्ते लीनास्ते भगवति कलाश्रे च सकलाः
ककाराद्या वृत्ते तदनु चतुरश्रे च यमुखाः ॥ २४॥

हलो बिन्दुर्वर्गाष्टकमिभदलं शाम्भववपु-
श्चतुश्चक्रं *शक्रस्थितमनुभयं शक्तिशिवयोः । varशक्तास्थित, शक्तौ स्थित
निशाद्या दर्शाद्याः श्रुतिनिगदिताः *पञ्चदशधा varपञ्चदश ता
*भवेयुर्नित्यास्तास्तव जननि मन्त्राक्षरगणाः ॥ २५॥ varनित्यास्तास्तव

इमास्ताः षोडश्यास्तव च सरघायां शशिकला
स्वरूपायां लीना निवसति तव श्रीशशिकला ।
अयं प्रत्याहारः श्रुत इह कलाव्यञ्जनगणः
ककारेणाकारः स्वरगणमशेषं कथयति ॥ २६॥

क्षकारः पञ्चाशत्कल इति *हलो बैन्दवगृहं varहरो
*ककारादूर्ध्वं स्याज्जननि तव नामाक्षरमिति । varक्षकारा
भवेत्पूजाकाले मणिखचितभूषाभिरभितः
प्रभाभिर्व्यालीढं भवति मणिपूरं सरसिजम् ॥ २७॥

वदन्त्येके वृद्धा मणिरिति जलं *तेन निबिडं varलीननिबिडं
परे तु त्वद्रूपं मणिधनुरितीदं समयिनः ।

अनाहत्या *नादः प्रभवति सुषुम्णाध्वजनितं- varसादः
स्तदा वायोस्तत्र प्रभव इदमाहुः समयिनः ॥ २८॥

तदेतत्ते संवित्कमलमिति संज्ञान्तरमुमे
भवेत्संवित्पूजा भवति कमलेऽस्मिन्समयिनाम् ।
विशुद्ध्याख्ये चक्रे वियदुदितमाहुः समयिनः
सदापूर्वो देवः शिव इति हिमानीसमतनुः ॥ २९॥

त्वदीयैरुद्द्योतैर्भवति च विशुद्ध्याख्यसदनं
भवेत्पूजा देव्या हिमकरकलाभिः समयिनाम् ।
सहस्रारे चक्रे निवसति कलापञ्चदशकं
तदेतन्नित्याख्यं भ्रमति सितपक्षे समयिनाम् ॥ ३०॥

अतः शुक्ले पक्षे *प्रतिदिनमिह त्वां भगवतीं varप्रतिदिनमहस्त्वां
निशायां सेवन्ते निशि चरमभागे समयिनः ।
शुचिः स्वाधिष्ठाने रविरुपरि संवित्सरसिजे
शशी चाज्ञाचक्रे हरिहरविधिग्रन्थय इमे ॥ ३१॥

कलायाः षोडश्याः प्रतिफलितबिम्बेन सहितं
तदीयैः पीयूषैः पुनरधिकमाप्लाविततनुः ।
सिते पक्षे सर्वास्थिथय इह कृष्णेऽपि च समा
यदा चामावास्या भवति न हि पूजा समयिनाम् ॥ ३२॥

इडायां पिङ्गल्यां चरत इह तौ सूर्यशशिनौ
तमस्याधारे तौ यदि तु *मिलितौ सा तिथिरमा । varतुलिती
तदाज्ञाचक्रस्थं शिशिरकरबिम्बे रविनिभं
दृढव्यालीढं सद्विगलितसुधासारविसरम् ॥ ३३॥

महाव्योमस्थेन्दोरमृतलहरीप्लाविततनुः
*प्रशुषद्वै नाडीप्रकरमनिशं प्लावयति तत् । varप्रशुष्यद्वेशन्त
यदाज्ञायां विद्युन्नियुतनियुताभाक्षरमयी
*स्थिता विद्युल्लेखा भगवति विधिग्रन्थिमभिनत् ॥ ३४॥ varसिता

ततो गत्वा ज्योत्स्नामयसमयलोकं *समयिनां varससमया
पराख्या सादाख्या जयति शिवतत्त्वेन मिलिता ।
सहस्रारे पद्मे शिशिरमहसां बिम्बमपरं
तदेव श्रीचक्रं सरघमिति तद्वैन्दवमिति ॥ ३५॥

वदन्त्येके सन्तः परशिवपदे तत्त्वमिलिते
ततस्त्वं *षट्विंशी भवसि शिवयोर्मेलनवपुः । varषट्त्रिंशा
त्रिखण्डेऽस्मिन्स्वान्ते परमपदपर्यङ्कसदने
परे सादाख्येऽस्मिन्निवसति *चतुर्धैक्यकलनात् ॥ ३६॥ varचतुर्थैक्य

*क्षितौ वह्निर्वह्नौ वसुदलजले दिङ्मरुति दि- varमहावह्नि
*क्कलाश्रे मन्वश्रं दृशि *वसुरथो राजकमले । varक्कलारे, वसुरधो
*प्रतिद्वैतग्रन्थिस्तदुपरि चतुर्द्वारसहितं varप्रतिद्वैतद्ग्रन्थि
*महीचक्रं चैकं भवति भगकोणैक्यकलनात् ॥ ३७॥ varमहाचक्रं

इति मन्त्रचक्रैक्यम्॥

*षडब्जारण्ये त्वां समयिन इमे पञ्चकसमां varषडब्जारण्यैस्त्वां
यदा संविद्रूपां विदधति च षोढैक्यकलिताम्* । varकलितम्
मनो जित्वा *चाज्ञासरसिज इह पादुरभव- varसरसिजमिह
त्तडिल्लेखा नित्या भगवति तवाधारसदनात् ॥ ३८॥

भवत्साम्यं केचित्त्रितयमिति *कौलप्रभृतयः varकौम्भप्र
परं तत्त्वाख्यं *चेत्यपरमिदमाहुः समयिनः । varचेत्स पर इद, परमिद
क्रियावस्थारूपं प्रकृतिरभिधापञ्चकसमं
तदेषां साम्यं *स्यादवनिषु च यो वेत्ति स मुनिः ॥ ३९॥ varत्वामवनिषु

इत्यैक्यनिरूपणम्॥

वशिन्याद्या अष्टावकचटतपाद्याः प्रकृतयः
स्ववर्गस्थाः स्वस्वायुधकलितहस्ताः स्वविषयाः ।
*यथावर्गं वर्णप्रचुरतनवो याभिरभवं- varयदा वर्गा वर्णप्रचुरतरवो
स्तव प्रस्तारास्ते त्रय इति जगुस्ते समयिनः ॥ ४०॥

इमा नित्या वर्णास्तव चरणसंमेलनवशा-
न्महामेरुस्थाः *स्युर्मनुमिलनकैलासवपुषः । varस्थास्यन्मनु
वशिन्याद्या एता अपि *तव सबिन्द्वात्मकतया varच सहबि
महीप्रस्तारोऽयं क्रम इति रहस्यं समयिनाम् ॥ ४१॥

इति प्रस्तारत्रयनिरूपणम्॥

भवेन्मूलाधारं तदुपरितनं चक्रमपि त-
द्द्वयं तामिस्राख्यं शिखिकिरणसंमेलनवशात् ।

तदेतत्कौलानां प्रतिदिनमनुष्ठेयमुदितं
भवत्या वामाख्यं मतमपि परित्याज्यमुभयम् ॥ ४२॥

अमीषां कौलानां भगवति भवेत्पूजनविधि-
स्तव स्वाधिष्ठाने तदनु च भवेन्मूलसदने ।
अतो बाह्या पूजा भवति भगरूपेण च ततो
निषिद्धाचारोऽयं निगमविरहोऽनिन्द्यचरिते ॥ ४३॥

नवव्यूहं कौलप्रभृतिकमतं* तेन स विभु- varप्रभृतिकमिदं
र्नवात्मा देवोऽयं जगदुदकृद्भैरववपुः* । varकृच्छैशंववपुः
नवात्मा वामादिप्रभृतिभिरिदं *भैरववपु- varबैन्दववपुः
र्महादेवी ताभ्यां जनकजननीमज्जगदिदम् ॥ ४४॥

भवेदेतच्चक्रद्वितयमतिदूरं समयिनां
विसृज्यैतद्युग्मं तदनु मणिपूराख्यसदने ।
त्वया *सृष्टैर्वारिप्रतिफलितसूर्येन्दुकिरणै- varसृष्टे वारि
*र्द्विधा लोके पूजां विदधति भवत्याः समयिनः ॥ ४५॥ varर्विभालोके

अधिष्ठानाधारद्वितयमिदमेवं* दशदलं varमेतद्दश
सहस्राराज्जातं *मणिपुरमतोऽभूद्दशदलम् । varमणिपुरमितो
हृदम्भोजान्मूलान्नृपदलमभूत्स्वान्तकमलं
तदेवैको बिन्दुर्भवति जगदुत्पत्तिकृदयम् ॥ ४६॥

सहस्रारं बिन्दुर्भवति च ततो बैन्दवगृहं
तदेतस्माज्जातं जगदिदमशेषं *सकरणम् । varन करणम्
ततो मूलाधाराद्द्वितयमभवत्तद्दशदलं
सहस्राराज्जातं तदिति दशधा बिन्दुरभवत् ॥ ४७॥

तदेतद्बिन्दोर्यद्दशकमभवत्तत्प्रकृतिकं
दशारं सूर्यारं नृपदलमभूत्स्वान्तकमलम्* । varन्नेत्रकमलम्
रहस्यं कौलानां द्वितयमभवन्मूलसदनं
*तथाधिष्ठानं च प्रकृतिमिह *सेवन्त इह ते ॥ ४८॥ varतदा , मथ सेवन्त्विह च ते

अतस्ते कौलास्ते भगवति दृढप्राकृतजना
इति प्राहुः प्राज्ञाः कुलसमयमार्गद्वयविदः ।
महान्तः सेवन्ते सकलजननीं बैन्दवगृहे
शिवाकारां नित्याममृतझरिकामैन्दवकलाम् ॥ ४९॥

इदं *कालोत्पत्तिस्थितिलयकरं पद्मनिकरं varकौलोत्पत्ति
त्रिखण्डं श्रीचक्रं मनुरपि *च तेषां च मिलनम् । varतु
तदैक्यं षोढा वा भवति च चतुर्धेति च तथा
तयोः साम्यं पञ्चप्रकृतिकमिदं शास्त्रमुदितम् ॥ ५०॥

उपास्तेरेतस्याः फलमपि च सर्वाधिकमभू-
त्तदेतत्कौलानां फलमिह हि चैतत्समयिनाम् ।
सहस्रारे पद्मे सुभगसुभगोदेति* सुभगे varक्तेति सुभगं
परं सौभाग्यं यत्तदिह तव सायुज्यपदवी ॥ ५१॥

*अतोऽस्याः संसिद्धौ सुभगसुभगाख्या गुरुकृपा- varअतस्ते संसिद्धा
कटाक्षव्यासङ्गात्स्रवदमृतनिष्यन्दसुलभा ।
तया विद्धो योगी विचरति निशायामपि दिवा
*दिवा भानू रात्रौ विधुरिव *कृतार्थीकृतमतिः ॥ ५२॥

varदिवा वा रात्रौ वा, कृतार्थीकृत इति

इति श्रीगौडपादाचर्यविरचिता
सुभगोदयस्तुतिः
सम्पूर्णा ।